में भी नव संख्यात्मक हैं तथा छै स्थानों से जाने के मार्ग हैं। वही छै स्थान षट् चक्रों के नाम से व्यवहृत हैं ॥११॥

11. This Para–Shakti which is responsible for the creation, sustenance, and dissolution of this universe has got a ninefold seat in the Macrocosmos as well as in the microcosmos. The knowledge of these nine centres can be attained through six channels arising from the six chakras. The nine seats are– Ardha–Chandra, Nirodhika, Nada, Nadant, Shakti, Vyapika, Samana, Unmana and Mahashunya. The Shadadhwa responsible for the creation of this universe is made up of Varna, Kala, Pada, Tattwa, Mantra and Bhuwan. These are also symbolised by the six chakras.

काम ऊर्ध्वगत बिन्दुराननं
भानुरेष तदधो गतौ स्तनौ ।
चित्रभानुशशिनावुभौ कला
योनिरत्र स हरार्धकुण्डली ॥१२॥

टीका :---

कामकलास्वरूपमाह-कामेति ऊर्ध्वत्रिकोणस्वरूपे ऊर्ध्वबिन्दुराननं मुखरूपं भानुः सूर्यस्वरूपश्चिन्तनीयः तदधोगतौ चित्रभानुरग्निः शशी चन्द्रश्च स्तनद्वयरूपेण चिन्तनीयौ । हरार्धकुण्डल्यत्र योनिरूपेण चिन्तनीया पूर्वोक्तादहमित्यस्माद् हकारवर्णादाविर्भूता तत्स्वरूपा च हरार्धकुण्डलीति ऊर्ध्वकुण्डलीति वा कथ्यते सा योनिरूपेण चिन्तनीया । इमा एव चतुष्कलारूपेणाग्रिमपद्ये कथयिष्यते ॥१२॥

**भावार्थ** :—ऊर्ध्व त्रिकोण में ऊपर का बिन्दु सूर्य है जो मुख रूप से चिन्तनीय है और नीचे के दोनों बिन्दु अग्नि एवं चन्द्रमा हैं जिनका स्तनद्वय रूप से चिन्तन करना चाहिये। और अहं शब्द में योनिस्वरूपी हकार ही ऊर्ध्व कुण्डली के रूप में ध्यान करने योग्य है यही कामकला का स्वरूप है ॥१२॥

12. This stanza gives us an idea of Kamakala It is made up of two interesecting triangles, one with vertex upwards (Shiva) and the other with its vertex–downwards (Shakti).

The punctum (Bindu) on the apex of the triangle with its vertex upwards is 'Sun' (Surya) and the two puncta (Bindus) forming the end points of the base of the triangle are the 'moon' (Chandra) and Fire (Agni). The 'Sun' (Surya) should be meditated upon as face and the Moon (Chandra) and Fire (Agni) as two breasts. The apex of the triangle with its vertex downwards represents the Yoni wherein the letter Ha of the word Aham is meditated upon. This Ha also represents the Urdhva–Kundalini. This all is symbolic of Kama–Kala.




( HARA ARDH KALĀ )

एवमात्मनि चतुष्कलामये
सर्वतत्वसमवायलक्षणे ।
न्यासमाहुरिह वैखरादि वाग्
वृत्तित: समविशेषभावनाम्॥१३॥

टीका :—

एवं द्वादशश्लोकोक्तप्रकारेण चतुष्कलात्मके सूर्यचन्द्राग्नि हरार्धकला-रूपे आत्मनि संवित्तत्त्वे सर्वतत्त्वानां समवायलक्षणः षट्त्रिंशत्तत्त्वानां समुदायस्तस्मिन्निह वैखरादिवाग्वृत्तितः अकारमारभ्य क्षान्तपर्यन्तं न्यासं तथा समविशेषभावनाञ्च तत्त्वानामाविर्भावतिरोभावरूपामाहुः ॥१३॥

**भावार्थ** :—उपरोक्त प्रकार से सूर्य, चन्द्र, अग्नि एवं ऊर्ध्व कुण्डलीगत संविद् तत्त्व ही ३६ तत्वों का आश्रय है। इसी स्थान पर अकार से लेकर क्षकार पर्यन्त मातृका का न्यास करना चाहिये। यहीं से तत्त्वों का आविर्भाव एवं तिरोभाव होता है ॥१३॥

13. In the above stanza (No. 12) Kama–Kala has been considered. It is constituted by Sun (Surya), Moon (Chandra), Fire (Agni) and the 'Urdhva–Kundalini'. This Kama–Kala is none else but Para–Shakti itself, also called the Samvittattwa. This is the abode of the thirty-six Tattwas. It is here only that the Nyas of the letters from Aa to Ksha should be done. The Tattwas evolve and dissolve from this place itself, verily the ultimate source of all. The four Kalas mentioned in this stanza are Sun (Surya), Moon (Chandra), Fire (Agni) and Haraardha Kala– the Yoni. The Para or Samvittattwa is made up of these four Kalas.

पूरुषत्वसमवाप्तिहेतुषु
यष्टिकाख्यनिजसूक्ष्मवर्ष्मणः ।
चित्पदे लयविधानमष्टधा-
ग्देवतान्यसनजुष्टमुत्तमम् ॥१४॥

टीका :—

पुरुषत्वसमवाप्तिः परतत्वप्राप्तिः तस्या हेतुषु साधनेषु यष्टिकाख्यं मेरुदण्डरूपेण प्रसिद्धं तस्य निजसूक्ष्मवर्ष्मणः निजसूक्ष्मशरीरस्य सम्बन्धिन्यः अष्ट

वाग्देवता वशिन्याद्याः तासां न्यसनं न्यासः जुष्टं युक्तं चित्पदे संवित्तत्त्वे लयविधानमुत्तमं सर्वश्रेष्ठं मन्यन्ते साधकैः ।

अष्ट वाग्देवतानां मूलाधारमारभ्य सोमचक्र पर्यन्तं क्रमेण न्यासः वशिनी, कामेश्वरी, मोदिनी, विमला, अरुणा, जयिनी, सर्वेश्वरी, कौलिनी इत्यष्ट वाग्देवताः क्रमेण लयभावनया सर्वासां लये सति चित्पदस्यानुभूतिर्जायते ॥१४॥

**भावार्थ** :—परतत्त्व की प्राप्ति हेतु मेरुदण्ड के सूक्ष्म शरीर में वशिन्यादि आठ वाग्देवताओं का मूलाधार से लेकर सोमचक्र पर्यन्त न्यास करना चाहिए तथा क्रमशः इन देवताओं की लय भावना से साधक को परतत्त्व का अनुभव होता है ॥१४॥

14. In the worship of Shree Yantra, there are eight Vak Devtas viz. Vashini, Kameshwari, Modini, Vimala, Aruna, Jayini, Sarveshwari and Kaulini. The devotee (Sadhak) is advised to contemplate and meditate upon these eight Vakdevtas inside the subtle form of spinal cord and their Nyas should be done in the eight Chakras from Mooladhar upto Soma Chakra. By a systematic merger of one into the other in the chronological order, the Para is realised.

अन्तरङ्गकरणप्रभावतः
स्वप्रकाशनभसोऽत्र संक्रमात् ।
पीठभावमुपयान्ति तानि त-
न्न्यास कर्म परधाम्नि हृल्लयः ॥१५॥

टीका :—

अन्तरङ्गकरणप्रभावतः अन्तरङ्ग एकादशेन्द्रियप्रभावेण सत्तया स्वप्रकाशनभसः स्वयं प्रकाशनभसो रूपस्य ब्रह्मणः संक्रमात् सम्बन्धात् तानि पीठभावमुपयान्ति । एकादश पीठस्थानानि तेषां न्यासकर्म तेन परधाम्नि चित्पदे हृल्लयस्तेन ऐकाग्र्यं सम्पद्यते । कामरूपं, जालन्धरं, पूर्णगिरिः उड्डियानं, वाराणसी, अवन्ती, माया, द्वारावती, मधुपुरी, अयोध्या, काञ्ची इत्येकादश पीठस्थानानि । तान्येवान्तरङ्गे एकादशेन्द्रियाणि पीठभावमुपगतानि दश महाविद्यानामपि करणत्वेन ग्रहणम् । मनसोऽनिन्द्रियत्वेन दशानां पीठानामिन्द्रियाणाञ्चैतत्पक्षे

स्वीकार: मायां परित्यक्तवान् क्रमज्ञ: । "इन्द्रियेभ्य: पराह्यर्था अर्थेभ्यश्च परं मन:" इति प्रमाणात् इन्द्रियेभ्यो मनस: पृथग्ग्रहणात् ॥१५॥

**भावार्थ :**—दश अथवा एकादश इन्द्रियाँ जो शरीर के अन्तर्भाग में स्थित हैं उनका सम्बन्ध स्वयं प्रकाशस्वरूप ब्रह्म से है उनमें ही काम रूप आदि पीठों का न्यास करने से परतत्त्व में एकाग्रता उत्पन्न होती है ॥१५॥

15. There are Eleven sense organs (Indriyas) including Manas and these are related to Brahma which is light (Prakash) itself If the devotee (Sadhaka) does the Nyasa of these eleven sense organs (Indriyas) in the eleven Peethas (the residing place of the deity), the all-absorbing realisation of the Para Tattwa is achieved. The eleven Peethas are Kamaroop, Jalandhar, Poornagiri, Uddiyan, Varanasi, Avanti, Maya, Dwaravati, Madhupuri, Ayodhya and Kanchi and the eleven sense organs (Indriyas) are five senses for knowledge (Gyanendrias and five senses for activity (Karmendiryas) and Manas (some people do not consider Manas as an Indriya). Maya peeth may not be included in Nyasa if Manas is not considered a sense organ (Indriya). The Brahama manifests itself or has relation with the external world through these sense organs (Indriyas). In fact their actual working represents the manifestation of Brahma. Moreover, the Peetha being the abode of a deity which is again a manifestation of Brahma, has been considered appropriate for the Nyasa of a sense organ (Indriya), hence the eleven sense organs (Indriyas) and eleven Peethas.

तत्वधाम युगमातृकात्मकं,
त्रित्रिकेण नियतेषु वस्तुषु ।
पादपात्रपरमामृतत्रयं,
तुर्यविश्रमणमर्घ्यशोभनम् ॥१६॥

टीका :—

तत्वानां धामतः संवित् तत्त्वतः युगमातृका स्वरव्यञ्जनभेदवती पुनश्च त्रित्रिकेण यकारमारभ्य क्षान्तेन सहत्रिकेण सर्व वस्तुषु नियतेषु परमामृतत्रयं पादपात्रं पाद्यपात्रं तुर्यपदे विश्रमणं शोभनमर्घ्यं भवति। अकथादि संज्ञया च इदमेव व्यवहृतम् ॥१६॥

भाषार्थ :—संविद्तत्त्व से ही उत्पन्न स्वर व्यञ्जन द्विविध भेद वाली मातृका एवं यकार से लेकर क्षकार पर्यन्त तीन त्रिकों में विभक्त है। वह सम्पूर्ण वस्तुओं में नियत रूप से निवास करती है उसके तीनों त्रिक ही अमृतमय पाद्य-पात्र हैं और उस मातृका का परतत्त्व में विश्राम ही अर्घ्य है। अकथादि संज्ञा से भी इसे ही कहा गया है ॥१६॥

16. The garland of letters which springs forth from Samvit Tattwa is composed of vowels and consonants, hence the word Yuga Matrika i. e. two types of Matrikas. The entire alphabet is divided into three portions (from Aa to Ksha), the first one ranges from 'Aa to 'Aha' (vowels), the second one from 'Ka to Ma' and the third one from 'Ya' to 'Ksha'. It resides eternally in all the objects. Now these three portions of the alphabet represent the embroisal Padya Patra (vessels used for offerring oblations) and the Arghya (offerring oblation by water) is nothing else but the dissolution of these three portions of the 'Matrika' in a state of complete blissful rest in the Para Tattwa. These are also represented by the 'Aa', 'Ka'. 'Tha' triangle.

मेदिनी प्रमुखमाशिवं मतं
तत्वचक्रमिहचक्रमुत्तमम् ।
स्वस्वभावसमवायभासिनी
देवता भवति सादिनी कला ॥१७॥

टीका :—

इह शास्त्रे मेदिनीप्रमुखमारभ्य आशिवं शिव पर्यन्तं तत्त्वचक्रं षट् त्रिंशत्-तत्त्वचक्रमुत्तमं चक्रं भवति। तत्त्वानां तत्स्वभावानाञ्च समवायः समूहस्तस्य

भासिनी प्रकाशिका सादिनी कला देवता भवति। सादाख्यतत्त्वाश्रिता सर्वं तत्त्वचक्रं प्रकाशयतीत्यर्थः ॥१७॥

**भावार्थ :**—पृथ्वी से लेकर शिव पर्यन्त ३६ तत्त्व एवं उनके स्वभाव ही उत्तम चक्र हैं जिनको प्रकाशित करने वाली सादिनी कला है जो सदाशिव तत्त्व के आश्रित है। वही सम्पूर्ण तत्त्व चक्रों को प्रकाशित करती है ॥१७॥

17. From Prithvi Tattwa to Shiva Tattwa are the thirty six Tattwas which are brought to light by Sadini Kala and this Kala is dependent on lord Sadashiva. All the Chakras i. e, Centres of Power are being illumined through the rays of this Sadini Kala.

आन्तरस्य निजसंविदात्मनो
मातुरक्षकरणाध्वनो बहिः।
मेयसंविदि समर्पणं तदा-
वाहनं समरसत्वलक्षणम् ॥१८॥

टीका :—

सर्वान्तर्भूतस्य निजसंविदात्मनो मातुः प्रमातृरूपस्य अक्षकरणाध्वना इन्द्रिय-द्वारा मेयसंविदि प्रमेयतत्वे विषयप्रकाशकसंविदि यत्समर्पणं एकीभावमापन्ने संघट्टे समरसत्वलक्षणमद्वैतरूपं तदावाहनं भवति ॥१८॥

**भावार्थ :**—संविदात्मक प्रमाता अर्थात् साधक अपनी इन्द्रियों के द्वारा उस मेय तत्त्व अर्थात् संविद् तत्त्व में एकीभावत्त्व प्राप्त करता है वही अद्वैत स्थिति है। उसी को पराशक्ति के पूजा का प्राथमिक उपचार आवाहन कहते हैं ॥१८॥

18. Now about inviting or invoking the deity (Aavahan) the author says that the devotee through his sense organs (Indriyas) establishes unison with the Samvit Tattwa that is the state of nonduality (Advaitya). This is supposed to be the first ceremony in the worship of Para.

पञ्चधैव यदिदं प्रपञ्चितं
पञ्चधानुभवशाश्वतोदयम् ।
तत्सुसंहरणमौपचारिकं
कर्म निर्मलनिजात्मसंविदि ॥१९॥

टीका :---

इदं दृश्यमानं प्रपञ्चितं जगत् पञ्चधैव पञ्चभूतरूपेण विस्तारमाप्तम् । पञ्चधानुभवेन शब्दस्पर्शरूपरसगन्धरूपेण शाश्वतोदयं नियमपूर्वकमुदयमेतेभ्यस्त-त्वेभ्यो जायते । अस्य पञ्चतत्त्वस्य संहरणमौपचारिकं कर्म निजात्मसंविदि पूजोपचार रूपं संहरणं लयकर्म भवति ॥१९॥

**भावार्थ** :—यह दृश्यमान सम्पूर्ण संसार पञ्चभूतात्मक है जिसका अनुभव शब्द, स्पर्श, रूप, रस, गन्ध स्वरूप से पाँच प्रकार का होता है । शरीर में इन तत्त्वों का नियमपूर्वक उदय होता है और क्रमानुसार इनका परतत्त्व में लय ही मानसोपचार पूजन है ॥१९॥

19. This whole visible universe is made up of five Tattwas. It is realised by oneself in its five fold manifestations as Sound, Touch, Form, Taste (Rasa) and Smell. These are very subtle Tattwas called the Tanmatra and these evolve in an ordained fashion and their dissolution in a chronological order into Para Tattwa constitutes the mental form of worship.

यस्तु पञ्चदशधा प्रकल्प्यते
काल एष शशिभानुसंक्रमात् ।
तस्य शाश्वतपदे लयक्रिया-
नित्यवासरकलार्चनं मतम् ॥२०॥

टीका :---

अथाद्यास्तिथयस्सर्वे स्वरा बिन्द्ववसानगाः तदन्ताः काल योगेन सोमसूर्यौ प्रकीर्त्तितौ । अकारमारभ्य (अं) इति पञ्चदशस्वरपर्यन्ताः शशिभानुसंक्रमात्

सूर्यचन्द्रयोगात् पञ्चदशतिथयः अहोरात्ररूपाः जायन्ते । एतस्य सर्वस्यैषः काल एव हेतुस्तस्य शाश्वतपदे लयक्रिया (अः) इति षोडशी कला रूपं शाश्वतपदं तस्मिन् लये सति नित्यवासरकालार्चनं नित्यप्रकाशमयदिवसकालार्चनं मतम् ॥२०॥

**भाषार्थ :**—अकार से लेकर (अं) पर्यन्त पन्द्रह स्वर ही दिन और रात रूप में पन्द्रह तिथियाँ होती हैं। अस्तु, इन पन्द्रह स्वरों का काल से योग है और सोलहवाँ स्वर (अः) ही परतत्त्व है जहाँ कि सदैव प्रकाश रहता है। उसका अर्चन ही नित्य दिवसकला का अर्चन है ॥२०॥

20. The fifteen vowels from Aa to Ang correspond to the fifteen diurnal cycles of Sun and Moon. Thus, these fifteen vowels bear a direct relation with time i.e. Kala. The sixteenth vowel Aha represents the Para–Tattwa which is beyond the diurnal variation of time as it is eternal light itself. The worship of this Eternal Light (i. e. Nitya–Divas–Kala) (Eternal day) is the real worship.

बाह्यचक्रमुपगा मरीचय-
स्तत्वजाललसदात्मसंविदः ।
तत्समर्चनमतीतचिन्मया-
नाख्यधाम्नि विलयक्रमक्रिया ॥२१॥

टीका :----

बाह्यपूजनचक्रं श्रीचक्रं मूलबिन्दुमारभ्य त्रैलोक्यमोहनचक्रपर्यन्तं तत्स्था मरीचयः एकाधिकनवतिसंख्याका किरणरूपा देवतास्तत्त्वजालेन लसतो-युक्तस्यात्मसंविद आत्मतत्त्वस्य वाङमनसयोरतीतमतिक्रान्तं चिन्मयमनाख्यं कथयितुमशक्यं धाम तस्मिन् विलयक्रमक्रिया क्रमेण लयचिन्तनं तत्समर्चनं सम्यक्पूजनं भवति । मूलबिन्दुतत्त्वात् प्रसृतस्य तत्रैव लयभावनं तत्समर्चनपदेनात्र चिन्तनं सम्मतम् ॥२१॥

**भाषार्थ :**—श्रीचक्र में बिन्दु से लेकर त्रैलोक्यमोहनचक्र पर्यन्त एकानबे (९१) संख्यात्मक किरण देवताओं का षट्त्रिंशत् तत्त्व युक्त अनिर्वचनीय पराशक्ति में क्रमशः लय की भावना का चिन्तन ही श्रेष्ठ पूजन है ॥२१॥

21. In the external form of Shree Yantra from the punctum (Bindu) on to the Trailokya-Mohana Chakra there are ninety one deities presiding over the ninety one rays emanating from the Shree Yantra. These should be meditated upon as dissolving one by one into the other finally culminating into the Para-Shakti which contains in itself the thirty six Tattwas and this constitutes the best form of worship.

यच्चतुर्विधमिदं विभासते
तत्त्वरूपममृतान्तराकृतिः ।
तस्य पञ्चमपदे लयक्रिया
सम्मतं बलिचतुष्टयं तथा ॥२२॥

टीका :--

यः परमात्मा अमृतान्तराकृतिः अन्तःस्थितामृतकलावानिदं दृश्यमानं चतुर्विधं स्वेदजाण्डजोद्भिज्जजरायुजरूपं विभासते अथवा जाग्रत्स्वप्नसुषुप्तितुर्याख्यं विभासते तस्य पञ्चमपदे तुर्यातीते लयक्रिया बलिचतुष्टयं सम्मतं समीचीनं मतम् ॥२२॥

**भावार्थ** :—जिस परा शक्ति में अमृत कला का निवास है उसी के द्वारा यह दृश्यमान चार प्रकार की सृष्टि (स्वेदज, अण्डज, उद्भिज्ज, जरायुज) एवं चार अवस्थाएँ (जाग्रत् स्वप्न सुषुप्ति तुरीय) स्फुरित होती हैं इन चारों का तुर्यातीत पद में लय करना ही चार प्रकार का बलिदान श्रेष्ठ कहा गया है ॥२२॥

22. The Para-Shakti which embodies the Amrit Kala brings about the manifestation of the four-fold creation (sweat born, egg born, seed born and membrane born), and the four states of consciousness, namely wakeful state (Jagrati), dream state (Swapna), the deep sleep state (Sushupti) and Turiya state. The merger of the four states into the Turiyateet the peak experience, constitutes the noblest form of the four types of sacrifices. (Sacrifice as a ritual which forms an integral part of the external worship).

पञ्चधा प्रसरतश्चिदात्मनो
ह्यान्तरस्य बहिरिन्द्रियात्मना।
सामरस्यमिह संविदात्मना-
रात्तिकं परमिदं समीरितम् ॥२३॥

टीका—

पञ्चधा प्राणापानसमानव्यानोदानरूपेणान्तरस्य चिदात्मनः हि प्रसरतः विस्तारं प्राप्तस्य बहिः पञ्चेन्द्रियात्मना श्रोत्र-त्वक्-चक्षू-रसना-घ्राणरूपेण इह चिदात्मनि संवित्स्वरूपे सर्वेषां लयेनेदं परं श्रेष्ठमारार्तिकं समीहितं प्रोक्तं महात्मभिः ॥२३॥

**भाषार्थ :—**पाँच प्रकार (प्राण, अपान, समान, व्यान, उदान) से विस्तार प्राप्त अन्तरात्मा का पञ्चेन्द्रिय रूप से पराशक्ति में लय ही महात्माओं ने सर्वश्रेष्ठ आरती उपचार बताया है ॥२३॥

23. Expanded in its potential through the five Pranas (Prana, Apana, Samana, Vyan, Udan) and manifesting itself through the five sense organs (Panch Indriyas) namely Ears. Skin, Eyes, Tongue and Nose, the self (Antaratma) when merged into the Para–Shakti forms the besrt kind of Aarati as stated by saints. (Aarati is a ritual where five flames are lighted and offered unto the Deity. The five flames are five sense organs activated by five Pranas).

वाक्सहैव मनसा निवर्तते
ऽप्राप्य निष्कलनिरञ्जनाद्यतः।
तत्र निर्मनसि शब्दवर्जिते
धाम्नि विश्रमणमुत्तमो जपः ॥२४॥

टीका :—

यतो यस्मान् निष्कलनिरञ्जनात् संवित्तत्त्वात् मनसा सह वाक् शब्दशक्तिः तत्स्वरूपमप्राप्य स्वसामर्थ्याद्बहिर्ज्ञात्वा निवर्तते प्रकाशयितुमशक्यमिति मन्यते।

तत्र निर्अनसि मनसाऽगम्ये शब्दवर्जिते शब्देन प्रकाशयितुमशक्ये धाम्नि प्रकाश-स्वरूपे विश्रमणमुत्तमो जपः मनसा भावश्रेष्ठो जपः इति भावः ॥२४॥

**भावार्थ :**—वह परतत्त्व निष्कल और निरञ्जन है, अतएव मन और वाणी की पहुँच वहां नहीं है । इसलिए उस शब्दशक्ति–वर्जित एवं मन से अगम्य उस प्रकाश स्वरूप परतत्त्व में विश्राम ही श्रेष्ठ जप है । २४॥

24. The Para Tattwa has no attributes and is flawless, hence called Nishkala and Niranjan. It is beyond the grasp of thought and speech. Final repose in this inconceivable, indescribable, self-effulgent Para Tattwa is the best kind of Japa.

बिम्बितं स्फुरति यत्र संविदा
रूपमान्तरमिदन्तया बहिः ।
विश्वमेतदखिलं चराचरं
दर्पणं हृदयदर्पणं परम् ॥२५॥

टीका :—

यत्र बिम्बितं बिम्बस्वरूपमिदन्तया विषयरूपेणान्तरमिदं रूपं संवित्तत्वेन बहिः नामरूपात्मकरूपेण स्फुरति व्यनक्ति तदखिलं चराचरं हृदयदर्पणं विश्व-मेतत् परं श्रेष्ठं दर्पणं सम्मतम् ॥२५॥

**भावार्थ :**—जिसमें बिम्ब रूप से प्रतिबिम्बित होकर वह परतत्त्व नामरूपात्मक रूप से व्यक्त होता है, यह चराचर सम्पूर्ण विश्व ही हृदयदर्पण है । यही श्रेष्ठ दर्पणोपचार है ॥२५॥

25. In the external worship the deity after having been bathed, anointed and dressed is shown a mirror which is called Darpanopchar. The learned author explains its esoteric significance. The Para Tattwa reflects itself in illusory forms and names constituting the universe. To mirror the same reality in one's own heart is the best Darpanopchar.

The devotee should experience unity with the expanded universe and the deity in his heart and thus reflect them as in a mirror.

छादयन्निखिलमात्मसंविदा
त्रायते निखिलतापसंकटात् ।
यच्चिदम्बरगतं शिवात्मकं
छत्रमत्र कमलं सुधामलम् ॥२६॥

टीका :—

निखिलं जगदात्मसंविदा पराशक्त्या निखिलतापसंकटात् आध्यात्मिकाधिदैवताधिभौतिकतापसंकटात् या त्रिविधदुःखात् त्रायते । यच्चिदम्बरगतं परव्योमस्थितं सुधावदमलं निर्मलं कमलं सहस्रारे स्थितं सर्वं छादयन् अत्र संविद्-विषये छत्रं सम्मतम् ॥२६॥

**भावार्थ** :—पराशक्ति के द्वारा आध्यात्मिक, आधिभौतिक, आधिदैविक इन त्रिविधि दुःखों से रक्षा होती है । परव्योम अर्थात् सहस्रार-स्थित कमल अमृत के समान निर्मल है और सबको आच्छादित किये हुए है। वही पराशक्ति का छत्र है ॥२६॥

26. The Para-Shakti protects the devotee from the three types of miseries which may be spiritual, worldly or of godly origin. Absolutely pure like nectar, the thousand petalled lotus, situated in (Para Vyoma) Sky (Akash) beyond all, envelopes everything underneath. This thousand petalled lotus is the Royal Chhatra or Canopy to be offered to Para Shakti.

पञ्चधा स्फुरणमेव संविद-
श्चामरं विविधचातुरक्रमम् ।
विश्वदृग्लयविचित्रनिर्मितं
स्वेक्षणं परमकम्पदं तपः ॥२७॥

टीका :—

संविदः=चिदात्मनः पञ्चधा चिद् आनन्दः इच्छा ज्ञानं क्रिया चैतदभिमानि-देवताः सदाशिवः, ईश्वरः, रुद्रः, विष्णुः, ब्रह्मा च विविधचातुरक्रमं स्थूलं सूक्ष्मं सूक्ष्मतरं सूक्ष्मतमञ्च विश्वदृशोऽनेकप्रकारिका दृष्टयस्तासां लय विचित्रेण निर्मितं स्वेक्षणं संवित्तत्वस्य चलनक्रियया पुनः पुनर्दर्शनं परमकम्पदं स्फुरणमाविर्भवनं तप एव चामरं पूजाङ्गं भवति ॥२७॥

**भावार्थ** :—संवित् तत्त्व का चार क्रम से (स्थूल, सूक्ष्म, सूक्ष्मतर, सूक्ष्मतम) एवं पाँच प्रकार (चिद्, आनन्द, इच्छा, ज्ञान, क्रिया) के चिन्तन द्वारा सम्पूर्ण प्रकार की दृष्टियों का लय करते हुये चलन क्रिया द्वारा स्फुरित होते हुए उस आत्मतत्त्व का साक्षात्कार ही चामरोपचार है ॥२७॥

27. Further, the author describes the (Chamaropachara). The Samvit Tattwa is composed of Chit, bliss (Ananda), divine will (Iccha), knowledge (Gyan) and action (Kriya) and they are controlled by the governing deities Sadashiva Ishwar, Rudra, Vishnu and Brahma. They manifest themselves as gross, subtle, more subtle and most subtle. Their dissolution back into Para by Chalan-Kriya and consequently the realisation of self (Atma Tattwa) is the best Chamaropachar. The Chamars are always moved to and fro and symbolic of that act is the Chalan Kriya vibrations produced in the process of evolution and dissolution of the five fold mainfestations of Para and their governing deities.

एषणात्रयमयस्य वर्ष्मण-
स्तत्त्वसंचयमयस्य संविदि ।
धाम्नि तत्त्वसमतीतसत्त्वके
स्वात्मनः खलुनिवेदनं मतम् ॥२८॥

टीका :—

एषणात्रयमयस्य लोकैषणा, पुत्रैषणा, वित्तैषणेति एषणात्रय तन्मयस्य वर्ष्मणोः जीवात्मतत्त्वस्य तत्त्वसंचयमयस्य: पञ्चतत्त्वैकत्रीभूतस्य षट्त्रिंशत्-तत्त्वातिक्रान्तसत्त्वके स्वरूपे परतत्त्वे धाम्नि प्रकाशमये संविदि खलु निश्चयेन

सर्वभावेन स्वात्मनः समर्पणं निवेदनं मतम् । 'यत्करोषि यदश्नासि यज्जुहोषि-ददासि यत्' इत्यादिना गीतायां यदुक्तम् तदेवात्र सुसङ्गतम्भवति ॥२८॥

**भावार्थ** :—तीन एषणाओं वाले पाञ्चभौतिक शरीराभिमानी जीवात्मा को षट्त्रिंशत् तत्त्व से परे प्रकाशमय सात्विक परतत्त्व में सर्वभावेन जो समर्पण है वही पूजा का निवेदन है ॥२८॥

28. There are three main worldly desires, Power, Progeny and Wealth haunting the human being. The author here explains the offerings Nivedanam for the worship of Para in its esoteric aspect.

The Nivedanam consists in the total surrender of the 'self' having three fold desires and is proudly conscious of its physical form made up of five elements,into the Para Tattwa which is Sattwic effulgent and is beyond all the thirty six Tattwas.

स्वप्रकाशवपुषा गुरुः शिवो
यः प्रसीदति पदार्थमस्तके
तत्प्रसादमिह तत्त्वशोधनं
प्राप्य मोदमुपयाति भावुकः ॥२९॥

टीका :—

पदार्थमस्तके सर्वतत्त्वमूर्धन्यभूते स्वप्रकाशवपुषा प्रकाशमयविग्रहेण यः स्थितः शिवः स एव गुरुर्यदा प्रसीदति प्रसन्नोभवति तत्प्रसादमिह शिष्ये तत्त्व-शोधनं तत्त्वानां निर्मलीभावं प्राप्य भावुको गुरुभावनायुक्तः शिष्यो मोदं हर्षं परमानन्दरूपमुपयाति प्राप्नोति । भूतशुद्ध्यादिकन्तु तदन्तर्गतमेव ॥२९॥

**भावार्थ** :—सहस्रार में सम्पूर्ण तत्त्वों के ऊपर प्रकाशमय शरीर वाले भगवान् शिव ही गुरु हैं । वह जब प्रसन्न होते हैं तब शिष्य को तत्त्व शुद्धि प्राप्त होती है एवं गुरु भावना से युक्त शिष्य प्रसन्न होकर परमानन्द प्राप्त करता है ॥२९॥

**29.** In the thousand petalled lotus beyond all the Tattwas the effulgent Lord Shiva himself is the master or Guru.

When he is pleased, the disciple is blessed with the purification of his Tattwas, and thus experiencing oneness with the Master (Guru) the disciple attains absolute bliss and peace.

पाशजालकमिदं परं पशो–
नाशकारणमतो मतं हविः ।
तत्त्वतो निजगुरोर्निरीक्षणा–
त्प्राप्यते तदमलं पवित्रितम् ॥३०॥

टीका :—

पशोर्जीवात्मनः इदं दृश्यमानं सर्वं परमतीव क्लेशकारकं पाशजालकं बन्धजनकमध्यात्मशास्त्रे निर्णीतम् । अतस्तस्य नाशकारणं हविर्मतम् । होमकार्यस्य प्रकाशात्मकत्वात् तद्द्रव्यस्य च दाह्यत्वाच्च पाशजालोऽपि तत्समः । तत्त्वतो निजगुरोर्निरीक्षणात् कारुणिकगुरुद्रष्टया निरीक्षणादवलोकनादमलं निर्मलं पवित्रितं शुद्धं ज्ञानं प्राप्यते । "ज्ञानाग्निः सर्वं कर्माणि भस्मीकरोतीदमेवात्र हविर्मतम् । अपाने जुह्वति प्राणमित्यादि स्मरणात् ॥३०॥

**भावार्थ** :—पाशबद्ध जीव का दृश्यमान सम्पूर्ण संसार पाशजाल अर्थात् बन्धन है उसके विनाश हेतु इस प्रकार का होम आवश्यक है कि गुरुदेव की दया दृष्टि से शिष्य को निर्मल और पवित्र ज्ञान प्राप्त हो जिसकी अग्नि से वह पाशजाल भस्म हो जाय ॥३०॥

30. The bonded self (Jeeva) is trapped in this manifest world of desires. This mesh in which the self (Jeeva) is entangled can be destroyed only by the fire of knowledge (Gyan) attained by the kindness of the master (Guru) and such a burning up of worldly bondages is the Homa i. e. the offering of oblations to the sacrificial fire.

वेद्यराशिधमनेन विश्वतो
निर्विकल्पमयवासनोल्बणम् ।
चित्तमेव धमनं शिवे मुख–
स्यार्पणं धमनिकार्पणं परम् ॥३१॥

विश्वतः सर्वतो वेद्यराशिधमनेन प्रमेयराशिनिवर्तनेन तस्य सविकल्पकत्वान्निवर्तनमेव श्रेयः। निर्विकल्पमयवासनोल्बणं सामरस्यमयभावनया प्रखरतमं चित्तमेव शिवे परमतत्त्वे मुखस्यार्पणं परमश्रेष्ठं धमनं धमनिकार्पणं भवति मुखेनेयं धमनक्रिया होमकर्तृभिः क्रियते चित्तधमन भस्त्राप्राणायामेन भवति ॥३१॥

**भाषार्थ** :—निर्विकल्प समाधि की तीव्र भावना द्वारा सम्पूर्ण विषयराशि भस्म हो जाती है, मन निर्मल हो जाता है और उसका शिव तत्त्व में समर्पण ही होम के लिए उक्त तीव्र भावना रूपी धौंकनी है। यह भस्त्रा-प्राणायाम का स्वरूप है ॥३१॥

31. The intense longing for the Nirvikalpa Samadhi consumes all wordly desires and the Manas attains an immaculate purity. The intensity of feeling behind the surrender of the purified self to the Shiva Tattwa is like the bellows to the sacrificial fire. In fact, the process represents the Bhastra Pranayam.

दीयते परशिवैक्यभावना
क्षीयते सकलपापसंचयः।
येन चिज्जलधिपारसेतुना
दीक्षणं गुरुकटाक्षवीक्षणम् ॥३२॥

टीका :—

साधकसाफल्यस्य गुरुमूलकत्वाद् गुरुकटाक्षमुपदिशन्नाह :—दीयत इति।

यदा श्रीगुरुणा परशिवैक्यभावना अद्वैताख्या शिष्यकल्याणाय दीयते उपदिश्यते तदा तया दृष्टिशक्तिपातदीक्षया सकलपापसंचयः समस्तपापराशिः नश्यति चिज्जलधिसेतुना चिदात्मसिन्धोः सेतुवत् तरणोपायभूतया गुरुकटाक्षवीक्षणमेव दीक्षणं भवति। एतदनुभवात्मकेन रूपेणैव ज्ञातुं शक्यम् ॥३२॥

**भाषार्थ** :—जब श्रीगुरुदेव शिष्य-कल्याण के लिये अद्वैत तत्त्व का उपदेश करते हैं तब उनके कृपादृष्टि पूर्वक देखने से दीक्षा प्राप्त होती है यही शक्तिपात है। इसके द्वारा समस्त पापराशि नष्ट हो जाती है यही परतत्त्व रूपी समुद्र के पार करने के लिये सेतु है। इस प्रकार श्री गुरुदेव का कृपा पूर्वकनिरीक्षण ही श्रेष्ठ दीक्षा है ॥३२॥

32. When the Master (Guru) preaches the Advaita Tattwa for the emancipation of the disciple and graces him with kind looks, the latter gets initiated (Diksha). Verily, this is Shaktipata, which destroys all the sins and serves as a bridge to cross the ocean of Para Tattwa. Such a kind, benevolent glance of the master is the best initiation (Diksha) for the disciple.

अन्तरङ्गकरणात्मनाञ्चतु:–
स्रोतसां विविधदेवताजुषाम् ।
पूजनं परमिहोन्मनीशिखा–
मध्यवर्ति हि शिवात्मयोजनम् ।।३३।।

टीका :—

अन्तरङ्गकरणात्मनाञ्चतु:स्रोतसां चतुरन्तरङ्गप्रवाहितानां मनोबुद्धि चित्ताहङ्काररूपाणां विविधदेवताजुषां ब्रह्मविष्णुरुद्रचन्द्रदेवै: सेवितानां करण-रूपेण पञ्चज्ञानेन्द्रियाणाञ्चोन्मनीशिखामध्यवर्ति मध्येशिवात्मनोर्जीवात्म परमात्मनोर्योजनमिह परं प्रकृष्टं पूजनं भवति ।।३३।।

**भावार्थ :**—अन्तरङ्ग से प्रवाहित चार स्रोत मन, बुद्धि, चित्त, अहङ्कार एवं उनके अधिष्ठाता देवताओं के द्वारा उन्मनी अवस्था में जीव और परमात्मा का योजन ही सर्वश्रेष्ठ पूजन है ।।३३।।

33. The four fold streaming out of the inner self in the form of Manas, Buddhi, Chit, and Ahankara is controlled by their presiding deities Brahma, Vishnu, Rudra and Chandra. The merger of the self (Jiva) and the Shiva in the Unmani state attained by the inner self, is the best kind of worship.

पञ्चबोधकरणानि मानसं
दर्शनानि विषयप्रदर्शनात् ।
दर्शनानि षडमूनि तानि त–
त्पूजनं भवति तल्लयाच्चिदि ।।३४।।

टीका :—

पञ्चबोधकरणानि पञ्चज्ञानेन्द्रियाणि मानसं च पञ्चविषयाणां प्रदर्शनादृर्शनानि ज्ञानानि भवन्ति षडमूनि तानि दर्शनानि तेषां सर्वेषां चिदि संवित्तत्त्वे क्रमेण लयात् तत्पूजनं भवति ॥३४॥

**भावार्थ :**—पाँच ज्ञानेन्द्रियाँ (श्रोत, त्वक्, चक्षू, रसना, घ्राण) तथा मन पाँचों ज्ञानों का प्रदर्शक होने से इस प्रकार ज्ञान के छैः प्रकार हैं। इन सबका क्रमशः परतत्त्व में लय ही पराशक्ति का पूजन है ॥३४॥

34. Five Sense organs for knowledge (Gyanendriyas), Ears, Skin, Eyes, Tongue and nose are activated by Manas. It being the exhibitor of the five forms of knowledge, constitutes the six types of Gyana along with five sense organs. Their dissolution respectively in Para–Tattwa is the worship of Para Shakti.

जाग्रदादिसमयाश्चतुर्विधा
ह्यन्तरात्मपरमात्मविग्रहाः ।
पञ्चमेऽत्र तदतीतचिद्घने
धाम्नि तल्लयमतिस्तदर्चनम् ॥३५॥

टीका :—

जाग्रदादिसमयाः जाग्रत्, स्वप्न, सुषुप्ति, तुर्यादि चतुर्विधाः संकेता अन्तरात्मपरमात्मनोर्जीवात्मपरमात्मनोर्विग्रहाः शरीराणि समष्टिव्यष्टिरूपाणि स्थूलसूक्ष्मभेदवन्ति तदतीतचिद्घने पञ्चमे तुर्यातीते धाम्नि परब्रह्मणि तल्लयमतिरुभयोरेकत्वमतिस्तदर्चनं पूजनं भवति ॥३५॥

**भावार्थ :**—जीवात्मा और परमात्मा की चार अवस्थायें (जाग्रत्, स्वप्न, सुषुप्ति और तुर्य) ही व्यष्टि और समष्टि रूप से उनके शरीर हैं। इन सबसे परे तुर्यातीत अवस्था में जीवात्मा और परमात्मा की एकत्व भावना बुद्धि ही उसका अर्चन है ॥३५॥

35. The self (Jeevatma) and God (Paramatma) both exist in the four states of consciousness– the wakeful state (Jagrat), state of dream (Swapna), state of deep sleep (Sushupti) and Turiya. Beyond these four states of existence there is one more state – Turiyateet, where unison can be established between self (Jeevatma) and God (Paramatma) and this mental attitude of unity of individual self into the universal self is the best worship (Archana).

खे निरस्तनिखिलागमक्रियै–
यां च निश्चरति शाश्वतोदया ।
सा शिवत्त्वसमवाप्तिकारिणी
खेचरी भवति खेदहारिणी ॥३६॥

टीका :

उक्त दीक्षणे लब्धे सति खे व्योम्नि निरस्तनिखिलागमक्रियैः कर्मप्रतिपादक-शास्त्रजालरहितैः पूर्णवैराग्यशीलैः सेविता शाश्वतोदया विविधप्रत्यवायरहिता या अवस्था निश्चरति वर्तते सा शिवत्वसमवाप्तिकारिणी सर्वक्लेशनिवृत्तिपूर्वकं पूर्णानन्ददायिनी अतएव खेदहारिणी खेचरी मुद्रा भवति ।

उक्तञ्च :—"मनः स्थिरं यस्य विनावलम्बनं वायुःस्थिरो यस्य विनावरोधनम् । दृष्टिःस्थिरा यस्य विनावलोकनं स्यात् सैव मुद्रा विमला च खेचरी ॥ इयमेव भैरवी मुद्रा शाम्भवी नाम्ना च साधकैर्व्यवह्रियते ॥३६॥

**भावार्थ** :—उक्त दीक्षा प्राप्त कर साधक सम्पूर्ण कर्मजाल से मुक्त होकर परव्योम में जिसका सेवन करता है वह अवस्था सब प्रकार के विघ्नों से रहित है तथा सम्पूर्ण क्लेशों को निवृत कर पूर्णानन्द देती है । अतः समस्त दुःखों को हरण करनेवाली यही खेचरी मुद्रा है ॥३६॥

36. Having been initiated as stated above, the devotee (Sadhaka) is free from all the tangles of rituals of scriptures (Karmas) and enjoys this blissful state in Paravyom the highest Akashick plane. This state liberates him from all

miseries and bestows eternal bliss. This particular posture (Mudra) of mind is called Khechari which destroys all torment and grief. Khechari is known to be a state where the mind (Manas) is steadfast without any effort and the Prana is in suspension without any conscious attempt and the gaze is intent without any object of perception. It is also known as Bhairavi or Shambhawi Mudra.

यत्स्वरूपमहिमा विकल्पतः
शक्तिचक्रमिह रज्जुसर्पवत् ।
तत्स्वरूपपरमार्थबोधत–
स्तत्र तस्य विलयो विसर्जनम् ॥३७॥

यत्स्वरूपस्य परमार्थरूपसंवित्तत्त्वस्य महिम्ना आसमन्ताद्विकल्पतः=विकल्पविषयकसमस्तकार्यतस्तत्स्वरूपस्य परमार्थबोधतः=अनिवर्त्यबोधादिह बोधे सति रज्जुसर्पवत् यथान्धकारे भ्रान्त्या रज्जौ सर्पबुद्धिर्जायते । अधिष्ठानभूतरज्जुज्ञाने जाते सर्पबुद्धेर्लयः=निवृत्तिस्तद्वत्तत्राधिष्ठानभूते संवित्तत्त्वे साक्षात्कारे सति इदं दृश्यमानं शक्तिचक्रं मायामयं विलीयते । एतादृशो विलयः पूजाविसर्जनं भवति ॥३७॥

**भाषार्थ** :—परमार्थस्वरूप संवित् तत्त्व की महिमा से ही सांसारिक समस्त मायिक कार्यों से मुक्ति मिल जाती है और उसके रूप का वास्तविक बोध हो जाता है जिससे यह दृश्यमान मायामय शक्तिचक्र विलुप्त हो जाता है। जैसे कि अन्धकार में पड़ी हुई रस्सी में सर्प का भ्रम, वह भी रस्सी के वास्तविक ज्ञान होने पर नष्ट हो जाता है। इस भ्रम का विलय ही पूजा का विसर्जन है ॥३७॥

37. The grace of Samvit Tattwa liberates one from all the tangles of the world and the reality reveals unto him. Consequently this Shakti Chakra i. e. the Universe of names and shapes created by Maya disappears. In darkness a piece of cord can be mistaken for a snake, but when the real knowledge regarding the cord dawns upon the individual, the fear completely vanishes. This disappearance of the illusion is Visarjan– the culmination of Puja.

या क्रिया समभिहारतस्त्रिधा
दीक्षितस्य गुरुभावनाधिका ।
सा विभेदलयभावनादिका
लभ्यतां परशिवैक्यसिद्धये ॥३८॥

श्री गुरुभावनया अधिका श्रेष्ठत्त्वमाप्ता दीक्षितस्य दीक्षां प्राप्तस्य विभेदलय-भावनादिका भेदनिवृत्तिपूर्विका अद्वैतज्ञानसमर्पिका सा क्रिया समभिहारतः त्रिधा परा, अपरा, परापरा इति त्रिधा कथनतो वास्तविकरूपेण तु एकैव सा पर-शिवैक्यसिद्धये परशिवो निर्गुणः परमशिवः सगुणस्तदैक्यसिद्धये अद्वैतलब्धये हे शिष्य गण ? लभ्यतां प्राप्यतामित्याशंसनं शिष्याणां कल्याणायेति ॥३८॥

इति चिद्विलासस्य प्रबोधिनी वृत्तिः समाप्ता ॥

**भावार्थ :**—श्री गुरु की भावना से जो अधिक श्रेष्ठ हो गयी है एवं दीक्षित साधक की भेदबुद्धि को नष्ट कर जो अद्वैत ज्ञान देती है तथा जो तीन प्रकार की होने पर भी वास्तव में एक है वही अद्वैतज्ञानप्रदायिनी क्रिया शिष्यगण को सगुण निर्गुण दोनों में अद्वैतावस्था प्रदान करे ॥३८॥

38. The learned author the last Shloka offers his blessings for the devotees. Ennobled by the grace of the Master (Guru), the Kriya which falls into three categories Para, Para Apra, Apra but is still one, and which gives the devotees (Sadhakas), the knowledge of the Advaita after ending his illusory discrimination, may bestow upon the disciples the realisation of the Advaita in both the states of Sagun (with attributes) and Nirgun (without attributes).

**इति चिद्विलास भावार्थ सम्पूर्ण**

□□□

